श्रीगणेशायनमः ॥ श्रीशिवउवाच ॥ अथवक्ष्येमहामंत्रंस्वर्णा
कर्षणभैरवं ॥ नत्वाहंपद्मनिलयंशिवशक्तयात्मकंमहत् ॥ १ ॥ यस्य
विज्ञानमात्रेणस्वर्णसिद्धीश्वरोभवेत् ॥ शांतिकंपौष्टिकंचैवव-
श्याकर्षणमोहनं ॥ २ ॥ मारणोच्चाटनंद्वेषःस्तंभनंचप्रशस्यते ॥
एवंक्रमेणदेवेशिमंत्रोद्धारक्रमंशृणु ॥ ३ ॥ प्रणवंपूर्वमुद्धृत्यवाग्भ-
वंतदनंतरं ॥ भूकामंचत्रयंमायाबीजत्रयसमन्वितं ॥ ४ ॥ संबी-
जंचैववंबीजमापदुद्धारणायच ॥ अजामलबद्धायवैपदंब्रूयात्ततः
परं ॥ ५ ॥ ममदारिद्र्यद्वेषणायब्रूयाच्चततःपरं ॥ ओं श्रीमहा-
भैरवायनमोंतोमंत्रईरितः ॥ लोकेश्वरायपश्चात्स्वर्णाकर्षण-
भैरवाय ॥ एवंमंत्रंतथाप्रत्यअष्टपंचदशाक्षरैः ॥ ७ ॥ अस्यर्षिरी
श्वरःप्रोक्तश्छंदःपंक्तिरुदीरितं ॥ देवताश्रीमहादेवःस्वर्णाकर्षण-

स्व० भै० भैरवः ॥ ८ ॥ ह्रांबीजंह्रींशक्तिः स्यात्ह्रूंचकीलकमेवच ॥ दारि
२ द्र्नाशनार्थेचविनियोगोस्यभावना ॥ ९ ॥ कुर्यान्मूलमनोर्वर्णां
स्त्रितयेनांगकल्पकं ॥ अथध्यानंप्रवक्ष्यामिभक्ताभीष्टप्रदायकं
॥१०॥ माणिक्यद्रुमकल्पमूलभवनेमाणिक्यसिंहासने ॥ दिव्या
गाकरहेमचंपकरुचादेव्यासमालिंगितः ॥ भक्तेभ्यःकरहेमपात्र
भरितंस्वर्णंदधानोभृशं स्वर्णाकर्षणभैरवोविजयतेस्वर्गापवर्गैकभूः
॥१२॥ एवंध्यायन्महेशानिअयुतंप्रजपेन्मनुं ॥ दशांशंहोमयेत्प
श्चात्तर्प्पयेच्चदशांशतः ॥१३॥ ब्राह्मणान्भोजयेत्पश्चान्मंत्रसिद्धि
र्नसंशयः ॥ अथपूजाक्रमंवक्ष्येसाधकानांहितायच ॥१४॥स्वात्मनः
पुरतोभागंगोमयेनोपलिप्यच ॥ अग्रत्रिकोणमालिख्यतन्मध्ये प०
कर्णिकायुतं ॥१५॥ षट्कोणावृतंसुवृत्तंचलिखित्पद्मदलाष्टकं ॥ २

स्व० भै० तद्बहिश्चतुरस्रंस्याद्देवंमंचासनंभवेत् ॥१६॥ कर्णिकायांयजेद्दे
२ वंस्वर्णाकर्षणभैरवं ॥ पूजयेदक्षतैर्गंधैःपुष्पधूपैश्चदीपकैः ॥१७॥
ततस्तदाज्ञांसंप्राप्ययजेदावरणंक्रमात् ॥ त्रिकोणमर्चयेद्गंधा
क्षतपुष्पोदकादिभिः ॥ १८ ॥ भुवनेशींचाग्निकोणेदक्षेसव्येच
भूश्रियौ ॥ षट्कोणाग्रेयजेत्पूर्वंकोणाद्यैरंगषट्ककं ॥ १९ ॥
अष्टारेषुचदेवेशिअसितांगादिभैरवान्॥ तद्बहिश्चाष्टपत्रेषुब्राह्म्या
द्यामातृकायजेत् ॥ २० ॥ तद्बहिश्चतुरस्रेषुलोकपालान्प्रपू
जयेत् ॥ एवंक्रमेणदेवेशिपूजयेन्नित्ययत्नतः ॥ २१ ॥ यतः स्वमू
र्ध्निदेवेशिचार्चयेद्गुरुपादुकां ॥ पूजनार्थमथोकुर्यादर्घ्यपात्रादि
साधनं ॥ २२ ॥ साधारंशालिकंपात्रंसद्वितीयमनुक्रमात् ॥ अमृ प०
तेशींचतन्मध्येअकथादित्रयस्त्रिकं ॥ २३ ॥ नवात्मानंदमिथुनं २

 तन्मध्यादमृतंमनुं॥ द्रव्यसंस्कारमंत्रश्चसहाचमालालयंतथा॥ आ
 नंदभैरवायनमः। सहाचमालोवरयीं स्वधादेव्यैवौषट्। इतिमंत्र
द्वयंदेवीअमृतीकरणंभवेत् ॥ अन्तेऽमृतेअमृतोद्भवेअमृतवर्षिं
णिअमृतस्राविणिअमृतंत्वाकर्षय २ सांसींसंअमृतेश्वरिस्वाहा
॥ पूजयेद्गंधपुष्पाद्यैर्बिन्दुभिश्चाष्टवारकैः ॥ २५ ॥ तद्बिंदुगंधपु
ष्पैश्चमूलमंत्रमनुक्रमात् ॥ अर्चयेत्कर्णिकामध्येस्वर्णाकर्षणभैरवं
॥ २६ ॥ सशक्तिकंयजेत्पश्चात्पात्रहेमंमहेश्वरं ॥ सर्वाभरणसंप
न्नंमुक्ताहारोपशोभितं ॥ २७ ॥ मदोन्मत्तंसुखासीनंभक्तानांवर
दायकं ॥ एवंक्रमेणदेवेशियजेदावरणंक्रमात् ॥ २८ ॥ गंधपुष्पा
क्षतैर्धूपैर्दीपालिपिशितादिभिः ॥ २९ ॥ पक्वैर्भक्ष्यैश्चभोज्या 
द्यैश्चरुकैश्चणकादिभिः ॥ नैवेद्यंचकुलेशानिषोडशैरुपचारकैः 

॥ ३० ॥ अथहोमंप्रवक्ष्यामियथाविभवविस्तरम् ॥ मंडपस्योत्तरे
भागेमंडपंकारयेद्बुधः ॥ ३१ ॥ स्थंडिलेवाथकुंडेवाप्रोक्षयेद्गं
धवारिणा ॥ तन्मध्येस्थापयेदग्निंविश्ववादिंविश्वतोमुखं ॥ ३२ ॥
स्वात्मानंगंधपुष्पाद्यैरलंकृत्यचसाधकः ॥ मूलाधारगतंविश्वमु
खंमंत्रंसमुच्चरन् ॥ ३३ ॥ अण्डरूपेनिर्गमय्यवहन्नासापुटाध्वना
॥ संसाध्याज्यंदक्षहस्तेकृत्वाब्रह्माग्निनासह ॥ तन्मध्येभावयेद्दे
वंस्वर्णाकर्षणभैरवं ॥ ३४ ॥ स्थापयेत्पुरतोदेविशालिकंपात्रमु
त्तमं ॥ आज्यपात्रंतथावामेस्थापयेत्कर्मसाधनं ॥ ३५ ॥ कुंडसं
पूज्ययत्नेनजुहुयाच्चयथाक्रमं ॥ मूलमंत्रेणजुहुयाद्द्रव्यशुद्धिपुरः
सरं ॥ ३६ ॥ आज्याहुतिंयथाशक्तयाजुहुयात्पाय संततः ॥ कर
वीरैर्जातिपुष्पैर्जपादाडिमसंभवैः ॥३७॥ रक्तप्रसूनैर्जुहुयात्सौभा

यंनिधिमश्नुते ॥ शुद्धद्रव्येणजुहुयाल्लभतेसकलंफलम् ॥ ३८ ॥
आज्यंचजुहुयाद्देविऐहिकामुष्मिकम्फलं ॥ मंत्रसिद्धिंचलभते
चन्दनादिघनैःक्रमात् ॥ ३९ ॥ पूर्णाहुतिंततःकुर्यान्मूलमंत्रेण
मंत्रवित् ॥ पुनरग्निंसमाकृष्यवह्नन्नासापुटेनतु ॥ ४० ॥ मूला
ग्निनाचसंयोज्यस्मरेच्चित्पावकंस्थिरं ॥ समाप्यतत्स्वयंमंत्रीकु
र्यान्न्यासंषडंगकं ॥ ४१ ॥ पुनरागत्यदेवेशिवध्वासनंसमंततः ॥
ध्यायेद्देवंपरानंदंस्वर्णाकर्षणभैरवं ॥ ४२ ॥ मूलमंत्रेणगंधाद्यैः
पुष्पांजलिसमर्पणं ॥ स्वासनंगंधपुष्पाद्यैरलंकृत्यसशक्तिकः
॥ ४३ ॥ पूर्णपात्रंकरेकृत्वास्मरेदानंदभैरवं ॥ स्वशक्तिंविनिवे
द्यादौतत्स्वीकुर्यात्सखीभवेत् ॥ ४४ ॥ यथाशांतिमूलमंत्रजपंकृ
त्वाथविन्यसेत् ॥ स्तोत्रैर्बहुविधैःस्तुत्वाद्यमस्वेतिसमुच्चरन्॥४५॥

इति श्रीरुद्रयामलेउमामहेश्वरसंवादेस्वर्णाकर्षणभैरवपटलंसंपूर्णम् ॥

॥ अथस्वर्णाकर्षणभैरवपद्धतिः ॥

श्रीगणेशायनमः ॥ शिवउवाच ॥ प्रातरुत्थायदेवेशिगुरुस्मरणपूर्वकं ॥ पश्चात्तुसाधकोभक्तिपूर्वकंभैरवंध्यायेत् ॥ ओं अस्य श्रीस्वर्णाकर्षणभैरवमंत्रस्य ब्रह्माऋषिस्त्रिष्टुप्छंदः हरिहरब्रह्मात्मकस्वर्णाकर्षणभैरवोदेवता ह्रौंबीजं सः शक्तिवंकीलकं स्वर्णाकर्षणप्रसादसिद्ध्यर्थंजपेविनियोगः ॥ ओंछंअंगु० ॥ ओंएँतर्ज० ॥ ओंक्लांह्रांमध्य०॥ ओंक्लीँह्रींअना०॥ ओंक्लूंक्रूंकनि०॥ ओंसःवंकरतल० ॥ ओं आपदुद्धारणायहृदये ॥ ओं अजामलवद्धायशिरसि ॥ ओं लोकेश्वराय शिखा० ॥ ओं स्वर्णाकर्षणभैरवायकव० ॥ ओं

ममदारिद्र्यविद्वेषणायनेत्र० ॥ ओं श्रीमहाभैरवायनमःअस्त्रा० ॥ रंरंरंतेजोज्वलत्प्रकाशायनमः ॥ ध्यानम् ॥ पीतवर्णंचतुर्बाहुंत्रिनेत्रंपीतवाससं ॥ अक्षयंस्वर्णमाणिक्यतडित्स्फुरितपात्रकं ॥ अभीप्सितमहाशूलंचामरंतोमरद्वयं ॥ सततंचिन्तयेद्देवंभैरवंसर्वसिद्धिदं ॥ दशधामूलंप्रजप्य ॥ प्रात.प्रभृतिसायांतंप्रतिमंत्रेणासंयमो ॥ समर्प्यस्नानसंध्याश्चजपतर्पणकर्मच ॥ पशुभिर्विमुखोभूत्वाजपमंडपमाविशेत् ॥ मंडपद्वारदक्षिणवामशाखायां गंगणपतयेनमः ॥ ओंदुंदुर्गायैनमः ॥ वामशाखायांबंबटुकायनमः ॥ क्षंक्षेत्रपालायनमः ॥ द्वारोपरिओंसंसरस्वत्यैनमः ॥ गंगंगायैनमः ॥ यंयमुनायैनमः ॥ इतिद्वारपूजा ॥ शुद्धासनेउपविश्यभूतशुद्धिंप्राणप्रतिष्ठांमातृकान्यासंकुर्यात् ॥ मूलमंत्रेणन्या

संविधायपूजामारभेतत्तः । ततस्तद्दक्षिणभागेत्रिकोणषट्कोण
मंडलेश्चचमुद्रयाविभाव्यगंधादिभिरभ्यर्च्य तदुपरिवल्लभं प्रतिष्ठा
प्यगंधाक्षतादिभिःसंपूज्यमुखेस्पृष्ट्वा ॥ अमृतेश्वर्यायआनन्दभैर
वायसप्तवारंजपित्वाधेनुमुद्रांप्रदर्श्यतदनन्तरंमुद्राद्वितीयंनिक्ष
प्यउद्बुध्यस्वेतिजपित्वा इतिप्रथमं द्वितीयःसंस्कारविधिः॥ अथ
शंखंप्रतिष्ठाप्यअर्घोदकेनपूजयेत् ॥ ततःश्रीपात्रस्थकलशमभि
संपूज्ययन्त्रोद्धारंकुर्यात् ॥ त्रिकोणप्रथमषट्कोणंद्विरष्टाप्यत्रसंयु
तं । चतुर्द्वारंपुनःकृत्वामध्येबिंदुंविनिक्षिपेत् ॥ अथदेवान्विधा
यादौयंत्रस्थांगंप्रपूजयेत् आकाशायनमः मूर्ध्नि समीरणायनमः
मुखे वरुणायनमः बाह्वौ चैकजनायनमः हृदये विश्वम्भृशायनमः
उदरे ब्रह्मणेनमः कट्यां जनार्दनायनमः पादयोः इत्यंगपूजा ॥

स्व० भै० चतुर्द्वारिप्रेतभूतवेतालेभ्योनमः॥ श्रीपादुकांपूजयामितर्पयामि
१० नमः॥ असुरेभ्यः॥ पू०त० ओंओंपिशाचेभ्यःपू०त० श्रीवेता
लेभ्यःपूज्या एताःसमस्तादेवताश्चतुर्द्वारिचक्रे समुद्रायसायुधाय
सपरिवारायसालंकारायसर्वोपचारैःसंपूज्यसंतर्पितेस्तुनम॥ इ
तिप्रथमावरणं॥ अथद्वितीयावरणं॥ वृत्तित्रयंपूजयामि ओं
निशिसिद्धा श्रीपा०समुद्राय॥ इतिद्वितीयावरणं॥ बहिरष्टद
ले ओंआदित्यायस्वशक्तिसहिताय श्री०पा०ओंचंद्रमसेस्वशक्ति
सहितायश्री०पा०॥ ओंभौमायस्वशक्तिसहितायश्री०पा०॥
ओंशुक्रायस्वशक्तिसहितायश्री०पा०॥ ओंराहवेकेतवेस्वशक्ति
सहितायश्रीपादु०॥ इतितृतीयावरणं॥ समुद्रायइतिअथांत
र्दलेचतुर्थावरणं॥ ओं असितांगभैरवायब्रह्माणीशक्तिसहिताय प० १०

श्रीपादु०पा० ॥ ओं रुरुभैरवायमाहेश्वरीशक्तिसहितायश्रीपा
दु०पा० ओं चंडभैरवायकौमारीशक्तिसहितायश्री०पा० ॥ ओं
क्रोधभैरवायनारसिंहीशक्तिसहितायश्री०पा० ॥ ओं उन्मत्त
भैरवायवाराहीशक्तिसहिताय श्री०पा० ॥ ओं कपालभैरवाय
इन्द्राणीशक्तिसहितायश्री०पा० ॥ ओं भीषणभैरवायचामुंडा
शक्तिसहितायश्री०पा० ॥ ओं संहारभैरवायचंडिकाशक्तिसहि
तायश्री०पा० ॥ समुद्भूतिचतुर्थावरणं ॥ अथषट्कोणे पंचमा
वरणं ॥ ओं आपदुद्धारणायश्रीपा० ॥ ओं अजामलबद्धायश्री०
पा० ॥ ओं लोकेश्वरायश्री०पा० ॥ ओं स्वर्णाकर्षणायश्री०
पा० ॥ ओं ममदारिद्र्यविद्वेषणायश्री०पा० ॥ ओं क्षेत्रपालभैर
वायश्री०पा० ॥ अथबिंदुसप्तमावरणं ॥ मूलमुच्चार्य्य मूलमंत्रेण

सप्तवारंपूजयेत् ॥ धेनुयोनिमुद्रांप्रदर्श्य ॥ स्वमूलंकृत्यभुजात:
गोभुत्वामनसासंतुय: पंचमुद्रांप्रदर्श्ययत्कुमारीसुलक्षणम् ॥
सुवासिनीश्री०पादु०तथास्त्रि:स्नात:स्त्रीकुर्यात्स्तोत्रजपादिकंधूप
दीपनानाविधभक्ष्यभोज्यरसपानफलतांबूलनीराजनकरणम् ॥
होमद्रव्यंकथ्यते ॥ शालिपरिमाणम् ॥ पललंजातीमधुपीतपुष्पं
द्रव्यंपूर्णाहुतिंदद्ततोबलिपूजापात्रस्थाने त्रिकोणषट्कोणमंड
लंकृत्वातदुपरिपात्रंप्रतिष्ठाप्यसर्वान्नोदकेनसप्रथमद्वितीयंनिक्षि
प्यगंधपुष्पाक्षतादिभि:संपूज्यधेनुयोनिमुद्रांप्रदर्श्यबटुकंक्षेत्रपालं
चसप्तवारंतर्पयित्वाततोबलिपात्रंगृहीत्वा बहिर्द्वारनिवेशिनींग
त्वाशुचौदेशेगंधपुष्पाक्षतादिभि:संपूज्यभो भोक्षेत्रपालसपरिवा
रआगच्छ ॥ इमांबलिंगृह्णगृह्ण ॥ दूर्वाबलिंदत्वा ॥ आच

स्य ॥ शांतिस्तवंपठेत् ॥ पूजास्थानेउपविश्यनिर्माल्यंशिरसिधृ
त्वाभक्ष्यंभोज्यंभक्षयेद्दिति सुखंविहरेत् ॥ इतिरुद्रयामलेउमा
महेश्वरसंवदेस्वर्णाकर्षणभैरवपद्धतिःसंपूर्णा ॥

## अथस्वर्णाकर्षणभैरवकवचं

श्रीर्जयति ॥ श्रीपार्वत्युवाच ॥ वदमेदेवदेवेशकवचंभैरवस्य
च ॥ यस्यविज्ञानमात्रेणसाधकानांशिवंभवेत् ॥ १ ॥ श्रीईश्वर
उवाच ॥ शृणुदेवीप्रवक्ष्यामिकवचंपरमाद्भुतम् ॥ स्वर्णाकर्षण
देवस्यभैरवस्यमहात्मनः ॥ २ ॥ येनविज्ञानमात्रेणसर्वसिद्धीश्व
रोभवेत् ॥ वाकल्पोत्तरोनामकवचस्यऋषिःशिवः ॥ ३ ॥ पंक्ति
च्छंदोदेवताचस्वर्णाकर्षणभैरवः ॥ सिद्धयेसर्वकर्माणांविनियोगः
प्रकीर्तितः ॥ ४ ॥ शिरोमेभैरवःपातुऐंह्रींश्रींऐंश्रीयंचमे ॥ वद

नंसकलंपातुआपदुद्धारणायच ॥ ५ ॥ ह्रांह्रींह्रूं कंठदेशंमेनाभित्तं
वधनस्यंच ॥ लोकेश्वरायबाहूमेस्वर्णाकर्षणावैत्वचं ॥ ६ ॥ भैर
वायेतिनाभिं मेममदारिद्र्यशत्रवे ॥ विद्वेषणायजठरंमहाभैरवा
यनमः ॥ ७ ॥ पादयुग्मंसदापातुश्रींह्रींऐंबीजरूपधृक् ॥ भैरवो
मेसदापातुसर्वांगंसर्वसंधिषु ॥ ८ ॥ भुवनेशोभुवःस्थानेपृथिवीं
सर्वथालभेत् ॥ श्रियंश्रियतरंभूत्यंकरोतुममसर्वभाक् ॥ ९ ॥ पूर्वे
मांपातुसततंभैरवश्चसितांगकः ॥ आग्नेयंतुरुरुर्नामदक्षिणे च
ण्डभैरवः ॥ १० ॥ नैर्ऋते क्रोधनःपातुउन्मत्तःपातुपश्चिमे ॥ क
पालीवायुकोणे चउत्तरेभीषणःस्वयं ॥ ११ ॥ ईशेपातुसदादेवः
संहाराख्यमहेश्वरः ऊर्ध्वं मेवटुकःपातुपातालेचरणायुधः ॥ १२ ॥
ब्रह्माणीपुत्रकः पातुमहेशीपुत्रकःस्वयं ॥ कौमारीपुत्रकोवंधुवै

ष्णावीपुत्रकोधनं ॥ १३ ॥ वाराहीपुत्रकोविद्यांसर्वदापरिरक्षतु
॥ इन्द्राणीपुत्रकोभ्रातॄश्चामुंडापुत्रकःकुलं ॥ १४ ॥ महालक्ष्मी
सुतःपातुराजद्वारेसुरालये ॥ सर्वतःसर्वदापातुचरणायुधभैरवः
॥ १५ ॥ इतितेकथितंदेवीकवचंसर्वसिद्धिदं ॥ सर्वरक्षाकरं
देविसमस्तपुरुषार्थदम्॥१६॥ कण्ठेवाबाहुमूलेवामस्तकेहृदयेपि
च ॥ श्रीसमानेषुदेवेशिसाधकः शिवतांव्रजेत् ॥ १७॥ इच्छा
सिद्धिःप्रतापेनकल्पवृक्षश्चजायते ॥ पठनस्यचमाहात्म्यंशृणुष्व
कमलानने ॥ १८ ॥ पूजांविधायविधिवत्प्रणम्यगुरुपादुकां ॥
शतावृत्तंपठेद्देविकवचंवाचनात्कविः ॥ १९ ॥ एवंदशदिनं
जप्त्वाविवादेविजयोभवेत् ॥ मासमात्रेणजायेतासर्वविद्यासु
पारगः ॥ २० ॥ द्विमासिकविराड्देवित्रिमासेसर्वसम्पदः ॥

चतुर्मासैस्तुसंसिद्धिर्जायतेकवचेनच ॥ २१ ॥ एवंसम्वत्सरं ज
प्त्वास्वर्णाकर्षणतांव्रजेत् ॥ बहुनाचकिमुक्तेनशिवतुल्यो भवेत्
स्वयम् ॥ २२ ॥ पञ्चवक्त्रेणदेवशिनवक्तुंशक्यतेमया ॥ स्वर्णाक
र्षणमाहात्म्यंभैरवस्यमहात्मनः ॥ २३ ॥ सहस्रवदनेनैवयत्
फलस्वक्तुमर्हसि ॥ इतिरुद्रयामलेतन्त्रेउमामहेश्वरसम्वादेस्वर्णा
कर्षणभैरवकवचम्सम्पूर्णम् ॥ २४ ॥

## अथभैरवसहस्रनाम

श्रीगणेशायानमः ॥ ओंकैलासशिखरेरम्येदेवदेवजगत्गुरुम्
पप्रच्छपार्वतीशंभुशंकरंलोकशंकरं ॥ १ ॥ देव्युवाच ॥ देव देव
महादेव सर्व भक्तस्वदायक ॥ आपदुःखदरिद्रादिपीडितानांन्र
णांविभो ॥ २ ॥ यद्धितं सुखसंपत्तिधनधान्यकरंसदा ॥ स्वर्णाक

षंणाभैरवंभक्तानामिष्टदायकम् ॥ ३ ॥ विशेषतोराजकुलेशान्तिपु
ष्टिप्रदायकम् ॥ बालग्रहादिशमनंनानासिद्धिकरंन्नृणाम् ॥ ४ ॥
वक्तुमर्हस्यशेषेणममानन्दकरंपरम् । श्रीभैरवउवाच ॥ स्तवराजं
महादेविभोगस्वर्गप्रदंनृणाम् ॥ ५ ॥ स्मरणात्स्तवराजस्यस्वर्णप्रा
प्तिस्वतत्क्षणात् ॥ स्मरणात्स्तवराजस्यभूतप्रेतपिशाचकाः ॥ ६ ॥
विद्रवन्त्यतितेभीताःकाल रुद्रादिवप्रजाः ॥ एकतःपन्नगासर्वेग
रुड़स्त्वेकतस्तथा ॥ ७ ॥ एकतोगणसंघाताश्चण्डवातोयथैकतः ।
एकतःपर्वताःसर्वेदंभोलिस्त्वेकतस्तथा ॥ ८ ॥ एकतोदैत्यसंघाता
स्त्वेकतःस्यात्सुदर्शनः ॥ एकतः काष्ठसंघाताएकतोग्निकणोयथा
॥ ९ ॥ घनांधकारएकत्रतपनस्त्वेकतस्तथा ॥ एकतोरोगसंघा
ताःसुधास्यादेकतस्तथा ॥ १० ॥ तथैवास्यप्रभावस्तुस्मृतिमात्रे

 णाद्दृश्यते ॥ स्तवराजंभैरवस्यजपन्सिद्धिमवाप्नुयात् ॥ ११ ॥ महा
 भैरवनामानिश्रयुतान्यर्बुदानिच ॥ नग्राहैरभिभूयेतभूतप्रेतादि
भिर्ग्रहैः ॥ १२ ॥ साम्राज्यंसर्वसंपत्तिसमृद्धोवसतेसुखम् ॥ तत्कुलं
नन्दतेपुंसांपुत्रपौत्रादिभिर्ध्रुवम् ॥ १३ ॥ श्री पार्वत्युवाच ॥ य
त्त्वयाकथितंदेवभैरवंकल्पमुत्तमम् ॥ अगण्यमहिमासत्यंश्रुतोमे
बहुधाविभो ॥ १४ ॥ तस्यनामान्यनन्तानिप्रयुतान्यर्बुदानिच ।
सन्तिसत्यंपुराज्ञातंमयावैपरमेश्वर ॥ १५ ॥ सारत्सारंसमुद्धृत्यते
षुनामसहस्रकम् ॥ सर्वान्कामानवाप्नोतिब्रूहिमेकरुणाकरम्
॥ १६ ॥ यस्त्विदंकीर्तयेन्नित्यंसर्वदुःखविवर्जितः ॥ सर्वान्कामा
नवाप्नोतिसर्वसिद्धिंचविन्दति ॥ १७ ॥ साधकःश्रद्धयायुक्तःसर्व 
थार्कसमद्युतिः ॥ अप्रधृष्यश्चभवतिसंग्रामेरणमूर्धसु ॥ १८ ॥ 

नाग्निचौरभयंतस्यग्रहराजभयंतथा ॥ नचमारीभयंतस्यव्याघ्र
चौरभयंनहि ॥ १६ ॥ शत्रूणांतस्यसंघेभ्योभयंक्वापिनजायते ॥
आयुरारोग्यमैश्वर्यंपुत्रपौत्रादिसंपदः ॥ २० ॥ भवन्तिकीर्तना
द्यस्यतद्ब्रूहिकरुणाकर ॥ श्री श्वरउवाच ॥ नाम्नांसहस्रंदेव
स्यस्वर्णदायमयाकृतम् ॥ २१ ॥ वक्ष्यामितत्वतःसम्यक्सारात्सा
रतरंशुभम् । सर्वपापहरंपुण्यंसर्वोपद्रवनाशनम् ॥ २२ ॥ स्वर्ण
प्राप्तिप्रदंचैवसाधकानांशुभावहम् ॥ सर्वमंगलमांगल्यंसर्वव्या
धिनिवारणम् ॥ २३ ॥ आयुष्करंपुष्टिकरंश्रीकरंचयशस्करम् ॥
भैरवस्तवराजस्यमहाभैरवऋषिःस्मृतः ॥ २४ ॥ भैरवोदेवताचैवा
नुष्टुपूछन्दःप्रकीर्तितम् ॥ ऋषिंशिरसिविन्यस्यछंदस्तुपरतोन्यसे
त् ॥ २५ ॥ देवतांहृदयेन्यस्यततोन्यंन्यासमाचरेत् ॥ भैरवंशिरसि

न्यस्यललाटेस्वर्णदायकं ॥ २६ ॥ नेत्रयोर्भूतहननंसारमेयानुगं
२० भ्रुवोः ॥ कर्णयोर्भूतनाथंचस्वर्णदंचकपोलयोः ॥ २७ ॥ नासापु
टोष्ठयोश्चैवस्वर्णाकर्षणभैरवम् ॥ अनादिभूतमास्येचशक्तिहस्तं
गलेन्यसेत् ॥ २८ ॥ स्कन्धयोर्दैत्यदलनंबाह्वोरतुलतेजसम् ॥ पा
ण्योःकपालिनंन्यस्यहृदयेमुण्डमालिनम् ॥ २९ ॥ शान्तंवक्षस्थलेन्य
स्यस्तनयोः कामनाशनम् ॥ उदरेभैरवंन्यस्यक्षेत्रेशंपार्श्वयोस्तथा
॥ ३० ॥ क्षेत्रपालंपृष्ठदेशेक्षेत्रज्ञंनाभिदेशके ॥ जानुनोर्वसुरूपंचस्व
र्णाकर्षणभैरवम् ॥ ३१ ॥ पूर्वेडमरुहस्तंचदक्षिणेदण्डधारिणम् ॥ स्व
र्णाभंपश्चिमायांचघण्टावादिनमुत्तरे ॥ ३२ ॥ आग्नेय्यामग्निवर्णं
ज्ञनैर्ऋतेचदिगंबरम् ॥ वायव्येसर्वभूतंतमीशान्याचाष्टसिद्धिदम् प०
॥ ३३ ॥ ऊर्ध्वंखेचारिणंन्यस्यपातालेरौद्ररूपिणम् ॥ एवंविन्यस्य २०

देवेशिषडंगेषुततोन्यसेत् ॥ ३४ ॥ हृदयेस्वर्णदातारंराज्यदातारं
मूर्द्धनि ॥ आनन्दपूर्वनाथायनाथायाथशिखासुच ॥३५॥ लक्ष्मीका
न्तिप्रियंचैवकवचेविन्यसेत्तथा ॥ स्वर्णाकर्षणभैरवायन्यसेन्नेत्रत्रये
तथा ॥ ३६ ॥ श्रीमदानंदनाथाय अस्त्रेचैवप्रयोजयेत् ॥ एवंन्यास
विधिंकृत्वायथावत्तदनंतरं ॥ ३७ ॥ ध्यानंतस्यप्रवक्ष्यामियथाध्या
त्वापठेन्नरः ॥ पारिजातद्रुमतटेसंस्थितेमणिमंडले ॥ ३८ ॥ सिंहा
सनगतंध्यायेद्भैरवंस्वर्णदायकं ॥ ३९ ॥ गाङ्गेयपात्रंडमरुंत्रिशूलं
वरंवरंसंदधतंत्रिनेत्रं ॥ देव्यायुतंतप्तसुवर्णवर्णंस्वर्णारव्यकंभै
रवमाश्रयेम ॥ ४० ॥ इतिध्यानंमहाराजस्वर्णाभंनागकुण्डलं ॥
श्रीभैरवीसमायुक्तंरत्नसिंहासनस्थितं ॥ ४१ ॥ एवंध्यात्वाथसंतु
ष्टोजपेत्कामानवाप्नुयात् ॥ साधकःसर्वलोकेषुसत्यंसत्यंनसंश

यः ॥ ४२ ॥ आनन्दंसर्वंगात्राणिशिरःशृंगांगदेवता ॥ ह्रींबीजं
क्लींशक्तिःसंकीलकंममकामनासिध्यर्थेजपेविनियोगः ॥ ओंनम
स्तेभैरवायब्रह्मविष्णुशिवात्मने ॥ नमस्त्रैलोक्यवंद्यायवरदाय
वरात्मने ॥ ४४ ॥ रत्नसिंहासनस्थायदिव्याभरणशोभिने ॥ दि
व्यमाल्यविभूषायनमस्तेदिव्यमूर्त्तये ॥४५॥ नमस्तेनमनेकहस्ता
यअनेकशिरसेनमः ॥ नमस्तेनेकभ्रात्रेचकवीश्वरायतेनमः
॥ ४६ ॥ नमस्तेनीलकंठायअनेकांशायतेनमः ॥ नमस्तेनेकपा
र्श्वायअनेकादित्यतेजसे ॥ ४७ ॥ भैरवोभूतनाथश्चभूतात्माभूत
भावनः ॥ भूतवासोभूतद्भूतिर्भूरिशोभूरिदक्षिणः ॥ ४८ ॥ भूता
ध्यक्षोभूतपतिर्भूधरोभूधरात्मजः ॥ भूपतिर्भास्करोभीरुर्भीमोभू
मिर्विभूतिदः ॥ ४९ ॥ भूतोभूकंपनोभूमिनामाभूताभिभावकः

॥ भगनेत्रोभवोभोक्ताभूदेवोभगवान्रथी ॥ ५० ॥ भ्राजिष्णुर्भो
जनंभोक्ताभिक्षुभुगभोजनप्रियः । भूतिमुष्योभृगिरीटि भक्तसा
धितविग्रहः ॥ ५१ ॥ भूतचारीनिशाचारीप्रेतचारीभयानकः ॥
भवात्माभूर्भुवोलक्ष्मीभूतिमान्भवविक्रमः ॥ ५२ ॥ पद्मगर्भो
महागर्भोविश्वगर्भोथभूरभूः ॥ भूतत्वोभुवनाधीशोभूतिकृभ्द्रां
तिनाशनः ॥ भूतिभूषितसर्वांगोभूशयोभूतवाहनः ॥ ५३ ॥ क्षे
त्रज्ञोभुवनाधीशोभूतिदोभूतिमत्प्रभुः ॥ क्षेत्रज्ञःक्षेत्रपालश्वक्षेत्र
विघ्ननिवारणः ॥ ५४ ॥ क्षान्तःक्षुद्रःक्षेत्रपश्चक्षुद्रघ्नःक्षत्रपःक्षमी ॥
क्षोभणोमारणःस्तंभोमोहनोनमनोवशी ॥ ५५ ॥ क्षपणः क्षान्ति
दःक्षामःक्षमीक्षेत्रधरोक्षरः ॥ कंकालःकालशमनःकलाकाष्ठाक
लानिधिः ॥ ५६ ॥ कालःकरालःकंकालीकमनीयःकलानिधिः

॥ कालःकालाकृतिर्वायुःकपर्दीकामशासनः॥ ५७ ॥ कुबेरबंधुः
कामात्माकर्णिकारप्रियःकपिः ॥ कामदेवःकामपालःकामीकां
तःकृतागमः ॥ ५८ ॥ कल्याणप्रकृतिःकल्पःकल्यादिःकमलेक्ष
णः॥ कमण्डलुधरःकेतुःकालयोगीत्वकल्मषः ॥ ५९ ॥ करणंका
रणंकर्ताकैलासपतिरीश्वरः ॥ कामभूःकामदोचिन्त्यःकिरीटी
कौशिकस्तथा ॥ ६० ॥ कपिलःकुशलःकर्त्ताकुमारःकपटःक्षमः ॥
कलाढ्यष्टकलाधारःकालःकंठकपालभृत् ॥ ६१ ॥ कैलासशिखरा
वासःकुबेरःकीर्तिभूषणः ॥ कालज्ञानीकलावासःकोपितःकान्त
विग्रहः ॥ ६२ ॥ कवचीकंटकीकुंठीकार्यकोविदविक्रमः ॥ काल
भक्षःकलंकारिःकिंकिणीकृतवासुकिः ॥ ६३ ॥ गणेश्वरश्चगौरी
शोगिरीशोगिरिबाधकः ॥ गिरिधन्वागुहागोप्तागुणराशिर्गुणा

करः ॥ ६४ ॥ गंभीरोगहनोगोप्तागायत्रीवल्लभोगतिः ॥ ग्रीष्मो
ग्रहपतिर्गुप्तोगेयोगव्यपतिस्त्वगः ॥ ६५ ॥ गणवाहोगुणग्राही
गणनोगुणराशिषः ॥ अग्रगामीश्वरोऽरोगोखट्वांगीगगनालयः
॥ ६६ ॥ अमोघोऽमोघफलदोघंटारोघटकप्रियः ॥ चन्द्रपीठ
श्चंद्रमौलिश्चित्ररेशश्चिरंतनः ॥ ६७ ॥ वित्तेशपश्चित्रबाहुरच्छ
लच्छिन्नसंशयः ॥ चतुर्वेदश्चतुर्बाहुश्चतुरश्चतुरप्रियः ॥ ६८ ॥
चामुण्डाजनकश्चंडश्चलवंचणसंचलः ॥ अचिंत्यमहिमाचिं
त्यश्चराचरचरित्रगुः ॥ ६९ ॥ चन्द्रसंजीवनश्चित्रउमाचार्यश्चतुर्मु
खः ॥ ओजस्तेजोद्युतिधरोजितकामोजनप्रियः ॥ ७० ॥ अजा
तशत्रुरोजस्वीजितकालोजगद्धितः ॥ जमदग्निर्जलनिधिर्जटिलो
जीवितेश्वरः ॥ ७१ ॥ जननोजन्यजन्मादिरर्जुनोजन्मविभ्रपः ॥

स्व० भै० जन्माधिपोजटीज्योतिर्जन्ममृत्युभयापहः ॥ ७२ ॥ जीवितान्त
२६ करोज्येष्ठोजगन्नाथोजनेश्वरः ॥ त्रिवर्गसाधनस्ताच्चर्यस्तद्गुणास्तन्तु
वर्धनः ॥ ७३ ॥ तपस्वीतारकस्तारस्तीव्रःस्वात्मनिसंस्थितः ॥ त
पनस्तापनस्तुष्टःस्नानयोनिरतंद्रितः ॥ ७४ ॥ उत्तमांगस्तिमि
रहाव्रतीवेदस्तनूनपात् ॥ अन्तर्हितस्तमिस्रघ्नस्तेजस्तेजोमयस्तनी
॥ ७५ ॥ तरुणार्थंकरस्तिग्मस्तत्त्वंतत्त्वगृहेचरः ॥ तेजोराशिः
शत्रुबाणहृत्वतिथिस्त्वातिथिप्रियः ॥ ७६ ॥ आत्मायोगशयोऽया
नस्तीर्थंदेवमयःशिवः ॥ स्थानदस्तपनःस्थाणुःस्थविष्ठःस्थविरःस्थि
रः ॥ ७७ ॥ त्रिलोकेशस्त्रिलोकात्मात्रिशूलीत्रिदशाधिपः ॥
त्रिलोचनस्त्रयीवेद्यस्त्रिवर्गस्थस्त्रिवर्गदः ॥ ७८ ॥ दूरश्रवादस्था प०
नघ्नोदुदर्शीदुःसहोदयः ॥ परोदेवोदेवदेवोदुन्दुभिर्दुन्दुभिप्रियः २८

नम्रोदुर्द्धर्षोदुःसहोदयः ॥ ...

स्व० भे० ॥ ७९ ॥ दृढायुधारीधनदोदत्तोदुःस्वप्ननाशनः ॥ दुर्नैमोदुर्गमो
२७ दुर्गोदुरावासोदुरासदः ॥ ८० ॥ दमोदमयितादान्तोदातादान
न्दयाकरः ॥ दुर्वासाद्विजोदेवकायोदुर्विज्ञोदुर्भगोदयः ॥ ८१ ॥
देहोदाहोदानवारिर्देवेन्द्रश्चारिमर्दनः । देवासुरगुरुर्देवोदेवासुर
नमस्कृतः ॥ ८२ ॥ देवासुरेश्वरोदिव्योदेवासुरमहेश्वरः ॥ सर्व
देवमयोदण्डोनक्षत्रोऽक्षरएवच ॥ ८३ ॥ नक्षत्रमालिकाकेशोना
गहारःपिनाकधृक् । व्ययनिर्वाहकोन्यायोनभोन्यायोनिरंजनः
॥ ८४ ॥ नीरावणोऽतिविज्ञानोनरसिंहोनिपातनः ॥ नंदी
श्वरोनग्नोनग्नव्रतधरोनरः ॥ ८५ ॥ निर्ममोनिरहंकारो
निर्मोहोनिरुपद्रवः ॥ निष्कंटकःकृतानंदोनिर्ध्यातोव्याजना प०
र्दनः ॥ ८६ ॥ अनघोनिष्कलोनिष्ठोनीलकायोनिरामयः ॥ अ २७

निरुद्धस्त्वनाद्यन्तोनैकात्मानैककर्मकृत् ॥ ८७ ॥ नगरेतानखी
नन्दीह्यानन्दवनवर्द्धनः ॥ योगोविरागीवैरागीत्यागीगौरीवरां
गनः ॥ ८८ ॥ कम्बुकण्ठोगृहस्तोगृध्रखण्डःखण्डभृद्दन्तकः ॥ तांडवाडं
बररुचीरुरुमण्डलमण्डितः ॥ ८९ ॥ परमेश्वरःपशुपतिःपिनाकी
पुरशासनः ॥ पुरात्सुतोदेवकीरःपरमेष्ठीपरायणः ॥ ९० ॥ पंच
विंशतितत्वस्थःपंचजंतुःप्रभंजनः ॥ मस्करश्चपरंब्रह्मपारिजातः
परात्परः ॥ ९१ ॥ प्रतिष्ठितःप्रमाणज्ञःप्रमाणंपरमार्थपः ॥ पंच
ब्रह्मसत्यतिश्चपरमात्मापरायणः ॥ ९२ ॥ पिनाकपाणिःप्राशु
श्चप्रत्ययःपरवीरहा ॥ प्रभाकरःप्रत्यक्षश्चप्रणवश्चपुरंजयः ॥ ९३ ॥
पवित्रपाणिःपापारिःप्रत्ययार्चिरपांनिधिः ॥ पुलस्त्यःपुलहोऽगस्त्य प०
पुरुहूतःपुरुष्टुतः ॥ ९४ ॥ पद्माकरःपरंज्योतिःपरापरफलप्र

पुरुहूतःपुरुष्टुतः ॥ ९४ ॥ पद्माकरःपरञ्ज्योतिःपरापरफलप्र

स्त० भै० दः ॥ परापरज्ञःपरदःपरभर्त्तुःपरंपदम् ॥ ९५ ॥ पूर्णःपूरयितापुण्यपु
२९ ण्यश्रवणकीर्त्तनः ॥ पुरन्दरःपुण्यकीर्त्तिःप्रमादीपापनाशनः ॥ ९६ ॥
परशीलःपरगुणःपादुरागःपुरंदरः ॥ परार्थव्यक्तिःप्रभवःपुरुषः
पुरुजःपिता ॥ ९७ ॥ पिङ्गलःपवनःप्रचस्त्वतलःपूषदन्तहा ॥ पर
मार्थगुरुःप्रीतिःप्रीतिमांश्चपुरातनः ॥ ९८ ॥ पराशरःपद्मग
र्भःपरःपरपुरंजयः ॥ उपप्लवोःभयकरःपरमार्थैकपण्डितः ॥ ९९ ॥
महेश्वरोमहादेवोमुङ्गलोमधुरोमृदुः ॥ मत्तःश्रयोमहायोगीम
हाकर्मामहौषधम् ॥ १०० ॥ महर्षिःकपिलाचार्योमृगधामाम
हालयः ॥ महानिधिर्महाभूतिर्महानीतिर्महामतिः ॥ १ ॥
महागुहोमहागन्तामहाभूतोऽमृतोयमः ॥ अमृतांशोऽमृतवपु प०
र्मरीचिर्मोहजालहा ॥ २ ॥ महातपामहाकाशोमृगवाणार्प २९

स्व० भै० ३० वी खलः ॥ महाबलोमहीपातामहायोगीमहामना: ॥ ३ ॥ म
हामायोमहाशान्तोमतिर्नादोमहोत्सवः ॥ मात्सर्यविन्महावी
र्यीमहाशक्तिर्महाद्युतिः ॥ ४ ॥ उन्मत्तकीर्तिरुन्मत्तोमघवान
मितोमतिः ॥ महाभागोऽस्तृतोमंत्रोमंगलोमंगलप्रियः ॥ ५ ॥
अमोघदण्डोमध्यस्थोमहेशोऽमोघविक्रमः ॥ अमेयोऽरिष्टमथनो
मुकुन्दःसर्वपापहा ॥ ६ ॥ मातामहोमातरिश्वामणिपूरोमहा
शयः ॥ ममहामहामहागर्भीमहाकल्पोमहाधनुः ॥ ७ ॥ मनो
मनोमयोमानीमेरूपद्योमृडोमनः ॥ महाशोभोमहाज्ञानीमहा
कालःकलिप्रियः ॥ ८ ॥ महाबटुर्महात्यागीमहाकोशीमहाग
तिः ॥ शिखण्डीकवचीशूलीजटीमुण्डीचकुण्डली ॥ ९ ॥ मेघमा
लीचक्रखड्गीमालीमायामहामणिः ॥ महेश्वासोमहानंतोम प० ३०

हाचारोमहाभुजः ॥ १० ॥ मखकर्त्तामखध्वंसीमधुरोमघवप्रि
यः ॥ ब्रह्मसृष्टिर्ब्रह्मवीर्योबाणहस्तोऽचलोबली ॥ ११ ॥ कारव
पोऽचलोन्मादीब्रम्हण्योब्रह्मवर्चसी ॥ बहुरूपोबहुमयोब्रह्मविष्णु
शिवात्मकः ॥ १२ ॥ ब्रह्मगर्भोऽचरोदम्भोब्रह्मज्योतिर्बृहस्प
तिः ॥ बीजबुद्धिर्ब्रह्मचारीब्राह्मणोब्राह्मणप्रियः ॥ १३ ॥ युगा
दिकृद्युगावर्त्तोयुगाध्यक्षोयुगापहा ॥ यज्ञोयज्ञपतिर्यज्ञोयज्ञांगो
यज्ञवाहनः ॥ १४ ॥ योगाचार्योयोगिगम्योयोगीयोग्यश्चयोग
वित् ॥ योगांगोयोगहारांगोयक्षोयुक्तिमयोयमः ॥ १५ ॥ रौद्रो
रौद्रऋषीराहुररतिरत्नोरणप्रियः ॥ लोकबंधुर्लोकनाथोलक्षयज्ञो
ष्यलणः ॥ १६ ॥ लोलमायोलोककर्तालोलोलालितएवच ॥
षरपोवरदोवद्योविद्वान्विश्वोमहेश्वरः ॥ १७ ॥ वेदांतसारसं

द्रोहोविततांगोविशारदः ॥ विश्वमूर्तिर्वेदवेद्योवामदेवोविमो
चकः ॥ १८ ॥ विश्वरूपोविरूपाक्षोवागीशोहव्यवाहनः ॥ वृषां
कश्चविशालाक्षोविश्वदर्शीविलोचनः ॥ १९ ॥ विशाखोविश्व
सृग्विश्वोविजितात्माऽव्ययःपुमान् ॥ व्याघ्रचर्मधरोव्यापीवाञ्छ
यैकनिधिर्विभुः ॥ २० ॥ वर्णाश्रमगुरुर्वर्णीवरदोवायुवाहनः ॥
विश्वकर्माविनीतात्मादेशशास्त्रार्थतत्त्ववित् ॥२१॥ वसुर्वसुमनाः
पालोविरामोविद्रुमच्छविः ॥ विमोचकश्चविजयो विशिष्टोवृष
वाहनः ॥ २२ ॥ विश्वेशोविबधोवादीवेदांगोवेदविन्मयः ॥ वि-
श्वेश्वरोवीरभद्रो वीरासनविधिर्विराट् ॥ २३ ॥ व्यवसायोव्यव-
स्थानो वीरचूडामणिर्विराट् ॥ बालखिल्यो विश्वदेहोविरामो
वसुदोवसुः ॥ २४ ॥ विरोचनोवेदवेद्योवेदो वाचस्पतिर्वशी ॥

स्व० भै० विद्वत्तमोवित्तमयो विश्रुतिर्विमलोदयः ॥ २५ ॥ वैवस्वतोवशि
३२ ष्ठश्चविभूतिर्विगतज्वरः ॥ विश्वहर्ताविश्वमोदी विश्वामित्रोद्वि-
जेश्वरः ॥ २६ ॥ वीरोत्पत्तिर्विश्वसहो विश्वावासोवसुश्रवाः ॥ वज्र
हस्तोवज्ररूपो विपाकोविश्वकारकः॥ २७ ॥ वृहदश्वोऽथालकल्पो
विशल्यो लोकशल्यकृत् ॥ विरूपोविकृतोवेगोविरिञ्चिर्विष्टरश्र
वाः॥२८॥ अऽव्यक्तलक्षणो ऽव्यक्तोऽव्यक्तोवैश्योविशांपतिः॥ विबुधा-
ग्रसरोवेदोविश्वगर्भोविचक्षणः ॥२९॥ विषमाक्षोविलोमाक्षोवृष
दोवृषवर्द्धनः॥ विविक्तदोवसंतश्चविवस्वान्वितमस्तमः ॥ ३० ॥
वेदवेद्योविश्वरूपोविवित्तोविश्वभाजनः॥ विषयस्थोविविक्तस्थो
विद्याराशिःपतिप्रियः ॥ ३१ ॥ शिवःशर्वःसदाचारःशंभुरीशान
ईश्वरः ॥ श्रुतिधर्मोक्तसंवादीसहस्राक्षःसहस्रपात् ॥ ३२ ॥ सर्व प०
३२

स्व० भै० न्न:सर्वदेवश्च शंकर:शूलधारक: ॥ शुचिराशि:स्कंदगुरु:श्रीकण्ठ:
३४ सूर्यतापन: ॥ ३३ ॥ ईशाननिलय:स्वस्तीसामवेदस्त्वर्थवित् ॥
वानि:सुनीति:शुद्धात्मासोम:सोमतर:सुखी ॥ ३४ ॥ सदाशिव:
समावृत्त:सुकीर्त्तिश्छिन्नसंशय: । सर्वकामीसदावास:सर्वायुध
विशारद: ॥ ३५ ॥ सुलभ:सूदन:शुद्ध:शुभांशु:शूद्रविग्रह ॥ सुव-
र्ण:स्वाश्रय:शत्रु:शत्रुजिच्छत्रुतापन: ॥ ३६ ॥ शनि:सूर्य:सर्वकर्मा
सर्वलोकप्रजापति: ॥ सिद्ध:सर्वेश्वर:स्वस्तिस्वस्तिकृत्स्वस्तिभू:स्व
धा ॥ ३७ ॥ वसुर्वसुमना:सत्यंसर्वपापहरोहर: ॥ सर्वादि:सि
द्धिद:सिद्धि:सर्वावासश्चतुष्पथ: ॥ ३८ ॥ संवत्सरकर:श्रीमान्शां
त:संवत्सर:शिशु: ॥ स्पष्टाक्षर:सर्वहारीसंग्राम:संगम:प्लव: ।३९॥ ध०
दृष्टोविशिष्ट:शिष्टेष्ट:सुलभ:सुलभायन: ॥ सुब्रह्मण्य:सुरगण:सु ३४

शरण्यःसुधापतिः ॥ ४० ॥ शरण्यःशाश्वतःस्कंदःशिपिविष्टः
शिवाश्रयः ॥ संसारचक्रभृत्सारःशंकरःसर्वसाधकः ॥ ४१ ॥
अस्त्रंशस्त्रंसप्तगणःसविितासकलागमः ॥ सुवीरःसप्तदोवीरःष
ड्विंशःसर्वलोकधृक् ॥ ४२ ॥ सम्राट्सुसेनःशत्रुघ्नःशूरशत्रुःशुभो
दयः ॥ समर्थःसुगमःशुक्रःसद्योगीसरसन्मयः ॥ ४३ ॥ शास्त्रने
त्रःसुखश्मश्रुःस्वाधिष्ठानषडाश्रयः ॥ प्रांशुःसप्तपतिर्ब्रह्मःश्रमनः
शिखिसारथिः ॥ ४४ ॥ सप्रतीकःसुवृद्धात्मासंस्पृष्टःसुखवाड्वि
धिः ॥ सुखानिलःसुसंपन्नःसुरभिःशिशिरात्मकः ॥ ४५ ॥ सर्व
देवमयःशैलःसर्वशास्त्रप्रभंजनः ॥ शिवालयःसूर्यरूपःसहस्त्रसुख
नाशकः ॥ सहस्त्रबाहुःसर्वेशःशारमःसर्वलोकधृक् ॥ ४६ ॥ इत्यं
शःसुरसेव्याशःसर्वदेवोत्तमोत्तमः ॥ शिवध्यानरतःश्रीमान्शिखी

स्व० भै० २६

श्रीचण्डिकाधिपः। स्मशाननिलयःसेतुःसर्वदेवोमहेश्वरः॥ सुविष्ट
भीःसुराराध्यःसुकुमारःसुलोचनः ॥ ४७ ॥ सकलःसुमतःस्वर्ग
स्वर्गस्वंरमथःस्वनः ॥ सामगःसकलाधारःसामगानप्रियःशुचिः
॥४८॥ सद्गतिःसत्कृतःशांतःसभूमिःसत्परायणः॥ श्रीवल्लभःशिवा
रंभःशांतभद्रःसमंजयः ॥ ४९ ॥ सत्यवाक्सात्विकीसत्यःसर्वजि
त्कृ तिसागरः ॥ सहस्रार्चिःसदाजिष्णुःसप्तांवरस्वनेश्वरः ॥ ५० ॥
संहारकारणःशुद्धःशत्रुघ्नःस्वर्णदायकः ॥ सुरेशःशरणंशर्मसर्वदे
वःसतांगतिः ॥ ५१ ॥ संवृतोसंवृतःशिल्पीसिद्धिदःसिद्धिस्वर्ण
दः ॥ शान्तबुद्धिःशुद्धबुद्धिःस्तव्यःस्तोतास्तवप्रियः ॥ ५२ ॥ रसज्ञः
स्वर्णरूपश्चशुद्धिराट्शुद्धिमान्वषट् ॥ स्थूलःसूक्ष्मःसहस्रार्कप्र प०
काशःसर्वतोमुखः ॥ ५३ ॥ सारमेयानुगःशंभुःप्रेतवाहःसहस्रकृ २६

त् ॥ ग्रहात्मकोरुद्ररूपोवस्वच्टस्वर्णाकृद्वशी ॥ ५४ ॥ आदित्यःसर्व
कर्त्ताचसर्वाग्रयःस्वर्णसिद्धिदः ॥ सदाकृष्टःस्वर्णदाताघुर्घुरोरक्त
लोचनः ॥ ५५ ॥ पादुकासिद्धिदःपातःपारुष्यविनिषूदनः ॥ अ
ष्टसिद्धिर्महासिद्धिःसुप्रसिद्धिश्चस्वर्णदः ॥ ५६ ॥ भूतवेतालघाती
चवेतालानुचरोरविः॥कालःकालाग्निरुद्रश्रोः स्वर्णाकर्षणभैरवः
॥ ५७ ॥ कालमालःकलामालस्त्र्यंबकस्त्रिपुरान्तकः ॥ सर्वाभि
चारहंताचपरकृत्यनिषूदनः ॥ ५८ ॥ मंत्रमालीसर्पमालीस्वर्णा
कर्षणभैरवः ॥ श्रीधरःश्रीकरःश्रीलःश्रीनिवासःसदाशिवः ॥ ५९ ॥
श्रीमंतःश्रीस्वरूपाकृत्श्रीहरोदुर्मुखःशिवः ॥ श्रीशान्तःश्रीवराहश्च
श्रीनिवासःश्रियांवरः ॥ ६० ॥ स्वर्णदःसिद्धिदःसिद्धोभक्तानांस्व
र्णदायकः ॥ नाम्नांसहस्रंस्वर्णस्यभैरवस्यमहात्मनः ॥ ६१ ॥

मयातेकथितंदेविरहस्यंस्वर्णदायकम् ॥ भैरवस्यवरारोहेवरंना
मसहस्रकम् ॥ ६२ ॥ पठेद्वापाठयेद्यस्तुशृणुयाद्वासमाहितः ॥
स्तोत्रमेतत्पठेद्विद्वान्सर्वदुःखौघनाशनम् ॥ ६३ ॥ सर्वाण्येतस्य
पादाग्रेलुठन्तिधरणीतले ॥ एककालंद्विकालंवात्रिकालमथवा
निशि ॥ ६४ ॥ पठेद्यःप्रयतो हारःसर्वसिद्धिंसविन्दति ॥ पूर्ति
कामोभूतिकामःषण्मासंचजपेत्सुधीः ॥ ६५ ॥ अथशत्रुविनाशा
र्थंजपेत्त्रिरात्रमुत्तमम् ॥ मासत्रयेणसर्वेषांरिपूणामन्तकोभवेत्
॥ ६६ ॥ मासत्रयंजपेद्देविभक्त्यानिश्चलमानसः ॥ धनंपुत्रांश्चदा
रांश्चप्राप्नुयान्नात्रसंशयः ॥ ६७ ॥ महाकारागृहेबद्धःपिशाचैर्यो
निवारितः ॥ शतमावर्त्तनाद्वापिपुरश्चरणमुच्यते ॥६८॥ स्वप्ने श्रीभै
रवंसाक्षाद्भक्तानांचवरप्रदम् ॥ यंयंकामयतेकामंतंतंप्राप्नोतिनि

स्व० भै० ॥ श्चितम् ॥ ६९ ॥ सत्यंसत्यंपुनःसत्यंसत्यंसत्यंपुनःपुनः ॥ सर्वका
२९ ॥ मप्रदोदेविभैरवःसर्वसिद्धिदः ॥ ७० ॥ सत्कुलीनायशान्तायमृद
वेसत्यवादिने ॥ स्तोत्रदानात्संप्रहृष्टोभैरवोभून्महेश्वरः ॥७१॥

इतिश्रीरुद्रयामलेतन्त्रे उमामहेश्वरसंवादे स्वर्णाकर्षणभैर
वसहस्रनामस्तोत्रंसंपूर्णम् ॥ शुभमस्तु ॥

श्रीगणेशायनमः ॥ मार्कण्डेयउवाच ॥ भगवन्प्रमथाधीशशि
वतुल्यपराक्रम ॥ पूर्वमुक्तस्त्वयामन्त्रोभैरवस्यमहात्मनः ॥ १ ॥
इदानींश्रोतुमिच्छामितस्यस्तोत्रमनुत्तमम् ॥ तत्केनोक्तंपुरास्तो
त्रंपठनात्तस्यकिंफलम् ॥ २ ॥ तत्सर्वंश्रोतुमिच्छामिब्रूहिमेनन्दि
केश्वर ॥ नन्दिकेश्वरउवाच ॥ इदंब्रह्मन्महाभागलोकानामुप प०
कारकम् ॥ ३ ॥ स्तोत्रंबटुकनाथस्यदुर्लभंभुवनत्रये ॥ सर्वपापप्रश ९३

मनंसर्वसंपत्प्रदायकम् ॥ ४ ॥ दारिद्र्यनाशनंपुंसामापदामपहा
रकम् ॥ अष्टैश्वर्यप्रदंनॄणांपराजयविनाशनम् ॥ ५ ॥ महाकीर्तिप्र
दंनित्यमपकीर्तिप्रणाशनम् ॥ महाकान्तिप्रदंपुंसामसौंदर्यविना
शनम् ॥ ६ ॥ खड्गाद्यष्टमहासिद्धिप्रदायकमनुत्तमम् ॥ भुक्तिमुक्ति
प्रदंस्तोत्रंभैरवस्यमहात्मनः ॥ ७ ॥ नवक्तव्यंनिराचारपुत्राणाम
पिसर्वथा ॥ शुचयेगुरुभक्तायशुचयेऽपितपस्विने ॥ ८ ॥ महाभैरवभ
क्तायसेविनेनिर्धनायच ॥ निजभक्तायवक्तव्यंअन्यथाशापमाप्नुया
त् ॥ ९ ॥ स्तोत्रमेतद्भैरवस्यब्रह्मविष्णुशिवात्मनः ॥ शृणुष्वावहि
तोब्रह्मन्सर्वकामप्रदायकम् ॥ १० ॥ ओं अस्यश्रीस्वर्णाकर्षणभैरव
स्तोत्रमन्त्रस्यब्रह्माऋषिः। अनुष्टुप्छन्दः। श्रीस्वर्णाकर्षणभैरवोदे
वता। ह्रींबीजंक्लींशक्तिः। सःकीलकंममसर्वकामसिद्धये जपेवापा

ठेविनियोगः। ओं नमस्तेस्तु,भैरवायब्रह्मविष्णुशिवात्मने ॥११॥
नमस्त्रैलोक्यवंद्यायवरदायपरात्मने ॥ रत्नसिंहासनस्थायदिव्या
भरणशोभिने ॥ दिव्यमाल्यविभूषायनमस्तेदिव्यमूर्त्तये ॥ नम
स्तेनेकहस्तायअनेकशिरसेनमः ॥ नमस्तेनेकनेत्रायअनेकविभ
वेनमः ॥१३॥ नमस्तेनेककण्ठायअनेकांसायतेनमः ॥ नमोस्त्व
नेकपार्श्वायअनेकादित्यतेजसे ॥ १४ ॥ अनेकायुधयुक्तायअनेक
सुरसेविते ॥ अनेकगुणयुक्तायमहादेवायतेनमः ॥ १५ ॥ नमो
दारिद्र्यकालायमहासंपत्प्रदायिने ॥ श्रीभैरवीसंयुतायत्रिलोकी
शायतेनमः ॥ १६ ॥ दिगंबरनमस्तुभ्यंदिगीशायनमोनमः ॥ न
मोस्तुदैत्यकालायपापकालायतेनमः ॥ १७ ॥ सर्वज्ञायनमस्तुभ्यं
नमस्तेदिव्यचक्षुषे ॥ अजितायनमस्तुभ्यंजितामित्रायतेनमः

॥ १८ ॥ नमस्ते रुद्रपुत्राय गणनाथाय ते नमः ॥ नमस्ते वीरवीरा
य महावीराय ते नमः ॥ १९ ॥ नमोऽस्त्वनंतवीर्याय महाघोराय ते
नमः ॥ नमस्ते घोरघोराय विश्वघोराय ते नमः ॥ २० ॥ नम उग्रा
य शान्ताय भक्तानां शान्तिदायिने ॥ गुरवे सर्वलोकानां नमः प्रणव
रूपिणे ॥ २१ ॥ नमस्ते वाग्भवाख्याय दीर्घकामाय ते नमः ॥ नम
स्ते कामराजाय जोषित्कामाय ते नमः ॥ २२ ॥ दीर्घमायास्वरूपा
य महामायाय ते नमः ॥ सृष्टिमायास्वरूपाय विसर्गसमयायिने
॥ २३ ॥ रुद्रलोकसुपूज्याय आपदुद्धारणाय च ॥ नमो यामलवद्धा
य सुवर्णाकर्षणाय ते ॥ २४ ॥ नमो नमो भैरवाय महादारिद्र्यना
शिने ॥ उन्मूलने कर्मठाय अलक्ष्म्याः सर्वदा नमः ॥ २५ ॥ नमो
लोकत्रयेशाय स्वानन्दनिहिताय ते ॥ नमः श्रीबीजरूपाय सर्वकाम

प्रदायिने ॥ २६ ॥ नमोमहाभैरवायश्रीभैरवनमोनमः ॥ धना
ध्यक्षनमस्तुभ्यंशरण्यायनमोनमः ॥ २७ ॥ नमःप्रसन्नरूपायश्रा
दिदेवायतेनमः ॥ नमस्तेमन्त्ररूपायनमस्तेरत्नरूपिणे ॥ २८ ॥
नमस्तेस्वर्णरूपायसुवर्णायनमोनमः ॥ नमःसुवर्णवर्णायमहापु
ण्यायतेनमः ॥ २९ ॥ नमःशुद्धायबुद्धायनमःसंसारतारिणे ॥ न
मोदेवायगुह्यायप्रबलायनमोनमः ॥ ३० ॥ नमस्तेबलरूपाय
परेषांबलनाशिने ॥ नमस्तेस्वर्णसंस्थायनमोभूलोकवासिने
॥ ३१ ॥ नमःपातालवासायअनाधारायतेनमः ॥ नमोनमःस्त
वांतायअनन्तायनसोनमः ॥ ३२ ॥ द्विभुजायनमस्तुभ्यंभुज
त्रयसुशोभिने ॥ नमोणिमादिसिद्धायस्वर्णहस्तायतेनमः
॥ ३३ ॥ पूर्णचंद्रप्रतीकाशवदनांभोजशोभिने ॥ नमस्तेस्व

र्णरूपायस्वर्णालंकारशोभिने ॥ ३४ ॥ नमःस्वर्णाकर्षणायस्व
र्णाभायनमोनमः ॥ नमस्तेस्वर्णकण्ठायस्वर्णाभांबरधारिणे
॥ ३५ ॥ स्वर्णसिंहासनस्थायस्वर्णपादायतेनमः ॥ नमःस्वर्णा
भपारायस्वर्णकांचीसुशोभिने ॥ ३६ ॥ नमस्तेस्वर्णजंघायभक्त
कामदुघात्मने ॥ नमस्तेस्वर्णभक्तानांकल्पवृक्षस्वरूपिणे ॥३७॥
चिन्तामणिस्वरूपायनमोब्रह्मादिसेविते ॥ कल्पद्रुमाधःसंस्थाय
बहुस्वर्णप्रदायिने ॥ ३८ ॥ भयकालायभक्तानांसर्वाभीष्टप्रदा
यिने ॥ नमोहेमाकर्षणाख्यभैरवायनमोनमः ॥ ३९ ॥ स्तवेना
नेनसन्तुष्टोभवलोकेशभैरव ॥ पश्यमांकरुणाविष्ट शरणागतवत्स
ल ॥ ४० ॥ श्रीभैरवधनाध्यक्षशरणंत्वांभजाम्यहम् ॥ प्रसीदसक
लान्कामान्प्रयच्छममसर्वदा ॥ ४१ ॥ श्रीमहाभैरवस्येदंस्तोत्रसु

त्तांसुदुर्लभम् ॥ मन्त्रात्मकंमहापुण्यंसर्वैश्वर्यप्रदायकम् ॥ ४२ ॥
यःपठेन्नित्यमेकाग्रंपातकैःसविमुच्यते ॥ लभतेचमतिंलक्ष्मीमष्टै
श्वर्याण्यवाप्नुयात् ॥ ४३ ॥ चिन्तामणिमवाप्नोतिधेनुंकल्पतरुं
ध्रुवम् स्वर्णराशिमवाप्नोतिशीघ्रमेवसमानवः ॥ ४४ ॥ सन्ध्यायांयः
पठेत्स्तोत्रंदशावृत्त्यानरोत्तमः ॥ स्वप्नेश्रीभैरवस्तस्यसाक्षाद्भूत्वा
जगद्गुरुः ॥ ४५ ॥ स्वर्णराशिंददात्येवतत्क्षणंनास्तिसंशयः ॥
सर्वदायःपठेत्स्तोत्रंभैरवस्यमहात्मनः ॥ ४६ ॥ लोकत्रयींवशीकु
र्यादचलांश्रियमाप्नुयात् ॥ नभयंलभतेक्कापिविघ्नभूतादिसंभवम्
॥ ४७ ॥ म्रियन्तेशत्रवोवश्यमलक्ष्मीनाशमाप्नुयात् अक्षयंलभते
सौख्यंसर्वदामानवोत्तमः ॥ अष्टपंचदशार्णाढ्योमन्त्रराजःप्रकी
र्तितः ॥ दारिद्र्यदुःखशमनःस्वर्णाकर्षणकारकः ॥ ४९ ॥ यएनं

स्व० भै० सञ्जपेद्धीमान्स्तोत्रंवाप्रपठेत्सदा ॥ महाभैरवसायुज्यंसोन्तकाले
४६ लभेद्ध्रुवम् ॥ ५० ॥

इति श्रीरुद्रयामलेस्वर्णाकर्षणभैरवस्तोत्रंसम्पूर्णम्। शुभमस्तु श्रीभैरव ॥

श्रीगणेशायनमः ॥ अथदारिद्रदहनस्तोत्रप्रारम्भः ॥ विश्वेश्वरायनरकार्णवतारणायकर्णामृतायशशिशेखरधारणाय ॥ कर्पूरकान्तिधवलायजटाधरायदारिद्रदुःखदहनायनमःशिवाय ॥ १ ॥ गौरीप्रियायरजनीशकलाधरायकालांतकायभुजगाधिपकंकणाय ॥ गङ्गाधरायगजराजविमर्द्दनायदारिद्रदुःखदमनायनमःशिवाय ॥ २ ॥ भक्तिप्रियायभवरोगभयापहायउग्रायदुर्गभवसागर प०
तारणाय ॥ ज्योतिर्मयायगुणनामसुनृत्यकायदारिद्रदुःखद० ४६

॥ ३ ॥ चर्मांबरायशवभस्मविलेपनायभालेक्षणायमणिकुंडलमं
डिताय॥ मंजीरपादयुगलायजटाधरायदारिद्र्यदुःखद० ॥४॥ प
ञ्चाननायफणिराजविभूषणायहेमांशुकायभुवनत्रयमण्डिताय॥
आनन्दभूमिवरदायतमोमयायदारिद्र्यदुःखदमनायनमःशिवाय
॥ ५ ॥ भानुप्रियायभवसागरतारणायकालांतकायकमलास
नपूजिताय ॥ नेत्रत्रयायशुभलक्षणलक्षितायदारिद्र्यदुःखदमना
यनमःशिवाय ॥ ६ ॥ रामप्रियायरघुनाथवरप्रदायनामप्रिया
यनरकार्णवतारणाय ॥ पुण्येषुपुण्यभरितायसुरार्चितायदारि
द्र्यदुःखदमनायनमःशिवाय ॥ ७ ॥ मुक्तेश्वरायफलदायगणेश्व
रायगीतप्रियायवृषभेश्वरवाहनाय ॥ मातंगचर्मवसनायमहेश्व
रायदारिद्र्यदुःखदमनायनमःशिवाय ॥ ८ ॥ वसिष्ठेनकृतंस्तोत्रं

सर्वरोगनिवारणम् ॥ सर्वसंपत्करंश्रीघ्रंपुत्रपौत्रादिवर्धनम् ॥९॥
त्रिसन्ध्यंयःपठेन्नित्यंसहिस्वर्गमवाप्नुयात् ॥ १० ॥ इतिवसिष्ठ
विरचितंदारिद्र्यदहनस्तोत्रंसम्पूर्णम् ॥

इतिस्वर्णाकर्षणभैरवपञ्चाङ्गसमाप्तमगमत् ॥

